अनुष्टुप छंदः। अंगारकी देवता। भौमपीडापरिहारार्थं जपे विनियोगः।

रक्तांबरो रक्तवपुः किरीटी, चतुर्भुजा मेषगमो गदाभृत्।
धरासुतः शक्तिधरश्च शूली, सदा मम स्याद्वरदः प्रशांतः।।
अंगारकः शिरोरक्षेत्, मुखं वै धरणीसुतः।
श्रवौ रक्तांबरः पातु, नेत्रे मे रक्तलोचनः।।
नासां शक्तिधरः पातु, मुखं मे रक्तलोचनः।
भुजौ मे रक्तमाली च, हस्तौ शक्तिधरस्तथा।।
वक्षः पातु वरांगश्च, हृदयं पातु लोहिताः।
कटिं मे ग्रहराजश्च, मुखं चैव धरासुतः।।
जानुजंघे कुजः पातु, पादौ भक्तप्रियः सदा।
सर्वाण्यन्यानि चांगानि, रक्षेन्मे मेषवाहनः।।
य इदं कवचं दिव्यं, सर्वशत्रुनिवारणम्।
भूतप्रेतपिशाचानां, नाशनं सर्वसिद्धिदम्।।
सर्वरोगहरं चैव, सर्वसंपत्प्रदं शुभम्।
भुक्तिमुक्तिप्रदं नृणां, सर्वसौभाग्यवर्धनम्।।
रोगबंधविमोक्षं च, सत्यम् एतत् न संशयः।

इति मंगलकवचं संपूर्णम्।।

# मंगल नामावली

ॐ महीसुताय स्वाहः

ॐ मङ्गलाय स्वाहः

ॐ महावीराय स्वाहः

ॐ महाबल पराक्रमाय स्वाहः

ॐ महाभद्राय स्वाहः

ॐ महाभागाय स्वाहः

ॐ मङ्गलप्रदाय स्वाहः

ॐ महाशूराय स्वाहः

ॐ महारौद्राय स्वाहः

ॐ माननीयाय स्वाहः

ॐ दयाकराय स्वाहः

ॐ अपर्वणाय स्वाहः

ॐ तापत्रय विवर्जिताय स्वाहः

ॐ सुताम्रा क्षाय स्वाहः

ॐ सुखप्रदाय स्वाहः

ॐ वरेण्याय स्वाहः

ॐ सुखिने स्वाहः

ॐ विरूपाक्षाय स्वाहः
ॐ विभावसवे स्वाहः
ॐ क्षत्रपाय स्वाहः
ॐ क्षयवृद्धि विनिर्मुक्ताय स्वाहः
ॐ विचक्षणाय स्वाहः
ॐ चतुर्वर्ग फलप्रदाय स्वाहः
ॐ विज्वराय स्वाहः
ॐ मानदाय स्वाहः
ॐ क्रूराय स्वाहः
ॐ सुप्रतीपाय स्वाहः
ॐ सुब्रह्मण्याय स्वाहः
ॐ वक्र स्तंभादि गमनाय स्वाहः
ॐ वरदाय स्वाहः
ॐ वीरभद्राय स्वाहः
ॐ विदूरस्थाय स्वाहः
ॐ नक्षत्रचक्र संचारिणे स्वाहः
ॐ क्षात्रवर्जिताय स्वाहः
ॐ क्षमायुक्ताय स्वाहः

ॐ अक्षीणफलदाय स्वाहः

ॐ वीतरागाय स्वाहः

ॐ विश्वकारणाय स्वाहः

ॐ नानाभय निकृन्तनाय स्वाहः

ॐ नक्षत्र राशि सञ्चाराय स्वाहः

ॐ वन्दारु जन्मान्दाराय स्वाहः

ॐ कमनीयाय स्वाहः

ॐ कनत् कनक भूषणाय स्वाहः

ॐ भव्यफलदाय स्वाहः

ॐ वक्राकुञ्चित मूर्द्धजाय स्वाहः

ॐ दयासाराय स्वाहः

ॐ भयघ्नाय स्वाहः

ॐ भक्ताभय वर प्रदाय स्वाहः

ॐ शमोपेताय स्वाहः

ॐ शत्रुहन्ते स्वाहः

ॐ शरणागत् पोषणाय स्वाहः

ॐ सद्गुणाध्यक्षाय स्वाहः



ॐ समरदुर्जयाय स्वाहः

ॐ शिष्टपूज्याय स्वाहः
ॐ दुश्चेष्टा वारकाय स्वाहः
ॐ दुर्धराय स्वाहः
ॐ दुःस्वप्नहंत्रे स्वाहः
ॐ दुष्टगर्व विमोचनाय स्वाहः
ॐ भूसुताय स्वाहः
ॐ रक्तांबराय स्वाहः
ॐ भक्तपालन तत्पराय स्वाहः
ॐ गदाधारिणे स्वाहः
ॐ मिताशनाय स्वाहः
ॐ साहसिने स्वाहः
ॐ साधवे स्वाहः
ॐ दुष्टदूराय स्वाहः
ॐ सर्वकष्ट निवारकाय स्वाहः
ॐ दुःख भञ्जनाय स्वाहः
ॐ हरये स्वाहः
ॐ दुर्घर्षाय स्वाहः
ॐ भरद्वाज कुलोद्भूताय स्वाहः

ॐ भव्यभूषणाय स्वाहः
ॐ रक्त वपुषे स्वाहः
ॐ चतुर्भुजाय स्वाहः
ॐ मेशवाहाय स्वाहः
ॐ शक्तिशूलघराय स्वाहः
ॐ शस्त्रविद्या विशारदाय स्वाहः
ॐ शक्ताय स्वाहः
ॐ तार्किकाय स्वाहः
ॐ तपस्विने स्वाहः
ॐ तप्तकाञ्चन संकाशाय स्वाहः
ॐ गोत्राऽधि देवाय स्वाहः
ॐ गोत्रा विभूषणाय स्वाहः
ॐ तामसाधाराय स्वाहः
ॐ ताम्र लोचनाय स्वाहः
ॐ रक्तकिञ्जलक सन्निभाय स्वाहः
ॐ गोमध्यचराय स्वाहः
ॐ अङ्गारकाय स्वाहः
ॐ जनार्दनाय स्वाहः

ॐ थूने स्वाहः
ॐ त्रिकोण मण्डल गताय स्वाहः
ॐ शुचये स्वाहः
ॐ शूराय स्वाहः
ॐ शुभावहाय स्वाहः
ॐ मेघाविने स्वाहः
ॐ सुखप्रदाय स्वाहः
ॐ सर्वाभीष्ट फलप्रदाय स्वाहः
ॐ असृजे स्वाहः
ॐ अवन्तीदेशा धीशाय स्वाहः
ॐ सूर्ययाम्य प्रदेशस्थाय स्वाहः
ॐ याम्य हरिन् मुखाय स्वाहः
ॐ त्रिदशाधिप सन्नुताय स्वाहः
ॐ शुचिकराय स्वाहः
ॐ शुचिवश्याय स्वाहः
ॐ मेष वृश्चिक राशीशय स्वाहः
ॐ मितभाषणाय स्वाहः
ॐ सुरूपाक्षाय स्वाहः
ॐ वीतभयाय स्वाहः

# बुधस्तोत्रम्

अस्य श्रीबुधतोत्रस्य प्रजापति-ऋषिः। त्रिष्टुप छन्दः। बुधो देवता बुधपीड़ानिवारणार्थं जपे विनियोगः।

बुधो बुद्धिमतां श्रेष्ठो, बुद्धिदाता धनप्रदः।
प्रियङ्गकलिकाश्यामः, कञ्जनेत्रो मनोहरः।।
ग्रहोपमो रौहिणेयो, नक्षत्रेशो दयाकरः।
विरुद्धकार्यहन्ता च, सौम्यो बुद्धिविवर्धनः।।
चन्द्रात्मजो विष्णुरूपी, ज्ञानी ज्ञो ज्ञानिनायकः।
ग्रहपीडाहरो दार, पुत्रधान्यपशुप्रदः ।।
लोकप्रियः सौम्यमूर्ति, र्गुणदो गुणिवत्सलः।।
पञ्चविंशतिनामानि, बुधस्यै तानि यः पठेत्।
स्मृत्वा बुधं सदा तस्य, पीडाः सर्वा विनश्यति।।
तद्दिने वा पठेद्यस्तु, लभते स मनोगतम्।।

इति बुधस्तोत्रं सम्पूर्णम्।

## बुध कवचम्

अस्य श्रीबुधकवचस्तोत्रमंत्रस्य कश्यप ऋषिः। अनुष्टुप् छंदः। बुधो देवता बुधपीडाशमनार्थं जपे विनियोगः।

बुधस्तु पुस्तकधरः, कुंकुमस्य समद्युतिः।
पीतांबरधरः पातु, पीतमाल्यानुलेपनः।।
कटिं च पातु मे सौम्यः, शिरौदेशं बुधस्तथा।
नेत्रे ज्ञानमयः पातु, श्रोत्रे पातु निशाप्रियः।।
घ्राणं गंधप्रियः पातु, जिह्वां विद्याप्रदो मम।
कंठं पातु विधोः पुत्रो, भुजा पुस्तकभूषणः।।
वक्षः पातु वरांगश्च, हृदयं रोहिणीसुतः।
नाभिं पातु सुराराध्यो, मध्यं पातु खगेश्वरः।।
जानुनी रौहिणेयञ्च, पातु जंघेऽखिलप्रदः।
पादौ मे बोधनः पातु, पातु सौम्योऽखिलं वपुः।।
एतद्धि कवचं दिव्यं, सर्वपापप्रणाशनम्।
सर्वरोगप्रशमनं, सर्वदुःख निवारणम्।।
आयुरारोग्यधनदे, पुत्रपौत्रप्रवर्धनम्।
यः पठेच्छृणुयाद्वापि, सर्वत्र विजयीभवेत्।।

इति श्री बुधकवचं संपूर्णम्।।

## बुध नामावली

ॐ बुधाय स्वाहः



ॐ सौम्याय स्वाहः

ॐ शुभप्रदाय स्वाहः

ॐ दृढ़फलाय स्वाहः

ॐ सत्याऽऽवासाय स्वाहः

ॐ श्रेयसां पतये स्वाहः

ॐ सोमजाय स्वाहः

ॐ श्रीमते स्वाहः

ॐ वेदविदे स्वाहः

ॐ वेदान्त ज्ञान भास्कराय स्वाहः

ॐ विदुषे स्वाहः

ॐ ऋजवे स्वाहः

ॐ वीर्यवते स्वाहः

ॐ त्रिवर्गफलदाय स्वाहः

ॐ त्रिदशाधिप पूतिताय स्वाहः

ॐ बहुशास्त्रज्ञाय स्वाहः

ॐ बन्धविमोचकाय स्वाहः

ॐ वासवाय स्वाहः

ॐ बुधार्चिताय स्वाहः

ॐ सौम्यचिताय स्वाहः

ॐ दृढ़व्रताय स्वाहः
ॐ श्रुतिजाल प्रबोधकाय स्वाहः
ॐ सत्यवचसे स्वाहः
ॐ अव्ययाय स्वाहः
ॐ सुखदाय स्वाहः
ॐ सोमवंश प्रदीपकाय स्वाहः
ॐ वेद तत्त्वज्ञाय स्वाहः
ॐ विद्या विचक्षणाय स्वाहः
ॐ विद्वत् पीतिकराय स्वाहः
ॐ विश्वानुकूल सञ्चाराय स्वाहः
ॐ विशेष विनयान्विताय स्वाहः
ॐ विविधागम सारज्ञाय स्वाहः
ॐ विगत ज्वराय स्वाहः
ॐ अनन्ताय स्वाहः
ॐ बुद्धिमते स्वाहः
ॐ बलिने स्वाहः
ॐ वक्रातिवक्र गमनाय स्वाहः
ॐ प्रसन्नवदनाय स्वाहः

ॐ वरेण्याय स्वाहः

ॐ सत्यवते स्वाहः

ॐ सत्यबंधवे स्वाहः

ॐ सर्वरोग प्रशमनाय स्वाहः

ॐ वाणिज्य निपुणाय स्वाहः

ॐ वाताङ्गाय स्वाहः

ॐ स्थूलाय स्वाहः

ॐ स्थूल सूक्ष्मादि कारणाय स्वाहः

ॐ प्रकाशात्मने स्वाहः

ॐ गगन भूषणाय स्वाहः

ॐ विशालाक्षाय स्वाहः

ॐ चारुशीलाय स्वाहः

ॐ चपलाय स्वाहः

ॐ उदङ्मुखाय स्वाहः

ॐ मगधाधिपतये स्वाहः

ॐ सौम्य वत्सर संजाताय स्वाहः

ॐ महते स्वाहः

ॐ सर्वज्ञाय स्वाहः

ॐ शिवंकराय स्वाहः
ॐ वसुधाधिपाय स्वाहः
ॐ वन्द्याय स्वाहः
ॐ वाग्विलक्षणाय स्वाहः
ॐ सत्यसंकल्पाय स्वाहः
ॐ सदादराय स्वाहः
ॐ सर्वमृत्यु निवारकाय स्वाहः
ॐ वश्याय स्वाहः
ॐ वातरोगहृते स्वाहः
ॐ स्थैर्यगुणा ध्यक्षाय स्वाहः
ॐ अप्रकाशाय स्वाहः
ॐ घनाय स्वाहः
ॐ विधिस्तुत्याय स्वाहः
ॐ विद्वज्जन मनोहराय स्वाहः
ॐ स्वप्रकाशाय स्वाहः
ॐ जितेन्द्रियाय स्वाहः
ॐ मखासक्ताय स्वाहः
ॐ हरये स्वाहः

ॐ सोम प्रियकराय स्वाहः
ॐ सिह्माधिरूढाय स्वाहः
ॐ शिखिवर्णाय स्वाहः
ॐ पीतवपुषे स्वाहः
ॐ खड्गचर्मधराय स्वाहः
ॐ कलुषहारकाय स्वाहः
ॐ अत्यन्तविनयाय स्वाहः
ॐ चांपेय पुष्पसंकाशाय स्वाहः
ॐ चारुभूषणाय स्वाहः
ॐ वीतभयाय स्वाहः
ॐ बन्धुप्रियाय स्वाहः
ॐ बाणमण्डल संश्रिताय स्वाहः
ॐ तर्कशास्त्र विशारदाय स्वाहः
ॐ प्रीति संयुक्ताय स्वाहः
ॐ प्रियभूषणाय स्वाहः
ॐ माधवासक्ताय स्वाहः
ॐ सुधिये स्वाहः
ॐ कामप्रदाय स्वाहः

ॐ मिथुनाधिपतये स्वाहः
ॐ घनफलाश्रयाय स्वाहः
ॐ पीतांबराय स्वाहः
ॐ पीतच्छत्र ध्वजाङ्कितताय स्वाहः
ॐ कार्यकर्त्रे स्वाहः
ॐ आत्रेय गोत्रजाय स्वाहः
ॐ विश्व पावनाय स्वाहः
ॐ चारणाय स्वाहः
ॐ वीतरागाय स्वाहः
ॐ विशुद्ध कनक प्रभाय स्वाहः
ॐ बन्धुयुक्ताय स्वाहः
ॐ अर्केशान निवासस्थाय स्वाहः
ॐ प्रशान्ताय स्वाहः
ॐ प्रियकृते स्वाहः
ॐ मेधाविने स्वाहः
ॐ कन्या राशि प्रियाय स्वाहः

# बृहस्पतिस्तोत्रम्

अस्य श्री बृहस्पति स्तोत्रस्य गृथ्समद ऋषिः। अनुष्टुप छन्दः। बृहस्पति .र्देवता। बृहस्पति प्रीत्यर्थं प्राप्त्यर्थ जपे विनियोगः।

गुरुबृहस्पतिर्जीवः, सुराचार्यो विदांवरः।
वागीशो धिषणो दीर्घमश्रुः पीताम्बरो युवा।।
सुधादृष्टि र्ग्रहाधीशो, ग्रहपीडाप हारकः।
दयाकरः सौम्यमूर्तिः, सुरार्च्यः कुङ्कुमद्युतिः।।
लोकपूज्यो लोकगुरु, र्नीतिज्ञो नीतिकारकः।
तारापतिश चाङ्गिरसो, वेदवैद्यपितामहः।।
भक्तया बृहस्पतिं स्मृत्वा, नामान्येतानि यः पठेत्।
अरोगी बलवान् श्रीमान्, पुत्रवान स भवेन्नरः।।
जीवेद्वर्षशतं मर्त्यः, पापं नश्यति नश्यति।
यः पूजयेत्गुरुदिने पीतगन्धाक्षताम्बरैः।।
पुष्पदीपोपहारैश्च, पूजयित्वा बृहस्पतिम्।
ब्राह्मणान्भोजयित्वा च, पीडाशान्तिर्भवेत्गुरोः।।

इति बृहस्पतिस्तोत्रं संपूर्णम्।।

# बृहस्पति कवचम्

अस्य श्रीबृहस्पतिकवचस्तोत्रमंत्रस्य ईश्वर ऋषिः। अनुष्टुप छंदः। गुरुर्देवता गं बीजं। श्रीशक्तिः। क्लीं कीलकम्। गुरुपीडोपशमनार्थं जपे विनियोगः।

अभीष्टफलदं देवं, सर्वज्ञं सुरपूजितम्।
अक्षमालाधरं शांतं, प्रणमामि बृहस्पतिम्।।
बृहस्पतिः शिरः पातु, ललाटं पातु मे गुरुः।
कर्णौ सुरगुरुः पातु, नेत्रे मेऽभीष्टदायकः।।
जिह्वां पातु सुराचार्यो, नासां मे वेदपारगः।
मुखं मे पातु सर्वज्ञो, कंठं मे देवतागुरुः।।
भुजावांगिरसः पातु, करौ पातु शुभप्रदः।
स्तनौ मे पातु वागीशः, कुक्षिं मे शुभलक्षणः।।
नाभिं देवगुरुः पातु, मध्यं पातु सुखप्रदः।
कटिं पातु जगद्वंद्य, उरू मे पातु वाक्पतिः।।
जानु जंघे सुराचार्यो, पादौ विश्वात्मकस्तथा।
अन्यानि यानि चांगानि, रक्षेन्मे सर्वतो गुरुः।।
इत्येत त्कवचं दिव्यं, त्रिसंध्यं यः पठेश्वरः।
सर्वान्कामानवाप्नोति, सर्वत्र विजयी भवेत्।।

इति श्रीबृहस्पतिकवचं संपूर्णम्।।

## गुरु नामावली

ॐ गुरवे स्वाहः
ॐ गोप्त्रे स्वाहः
ॐ गोपति प्रियाय स्वाहः
ॐ गुणवतां श्रेष्ठाय स्वाहः
ॐ अव्ययाय स्वाहः
ॐ जयन्ताय स्वाहः
ॐ जीवाय स्वाहः
ॐ जयावहाय स्वाहः
ॐ अध्वरासक्ताय स्वाहः
ॐ अध्वरकृत्पराय स्वाहः
ॐ गुणाकराय स्वाहः
ॐ गोचराय स्वाहः
ॐ गुणिने स्वाहः
ॐ गुरूणां गुरवे स्वाहः
ॐ जेत्रे स्वाहः
ॐ जयदाय स्वाहः
ॐ अनन्ताय स्वाहः

ॐ आंगिरसाय स्वाहः
ॐ विविक्ताय स्वाहः
ॐ वाचस्पतये स्वाहः
ॐ वशिने स्वाहः
ॐ वरिष्ठाय स्वाहः
ॐ चित्त शुद्धिकराय स्वाहः
ॐ चैत्राय स्वाहः
ॐ बृहत् स्थाय स्वाहः
ॐ बृहस्पतये स्वाहः
ॐ सुरा चार्याय स्वाहः
ॐ सुरकार्य कृतोद्यमाय स्वाहः
ॐ वश्याय स्वाहः
ॐ वाग्निचक्षणाय स्वाहः
ॐ श्रीमते स्वाहः
ॐ चित्र शिखण्डिजाय स्वाहः
ॐ बृहद्भानवे स्वाहः
ॐ अभीष्टदाय स्वाहः
ॐ सुराराध्याय स्वाहः

ॐ गीर्वाण पोषकाय स्वाहः
ॐ धन्याय स्वाहः
ॐ गिरिशाय स्वाहः
ॐ धीवराय स्वाहः
ॐ दिव्यी भूषणाय स्वाहः
ॐ धनुर् द्धराय स्वाहः
ॐ दया साराय स्वाहः
ॐ दारिद्य नाशनाय स्वाहः
ॐ दक्षिणायन संभवाय स्वाहः
ॐ देवाय स्वाहः
ॐ हरये स्वाहः
ॐ अङ्गिरःकुलसंभवाय स्वाहः
ॐ धीमते स्वाहः
ॐ गीष्पतये स्वाहः
ॐ अनघाय स्वाहः
ॐ धिषणाय स्वाहः
ॐ देवपूजिताय स्वाहः
ॐ दैत्यहन्त्रे स्वाहः

ॐ दयाकराय स्वाहः
ॐ धन्याय स्वाहः
ॐ धनुर् मीनाधिपाय स्वाहः
ॐ धनुर्बाणधराय स्वाहः
ॐ अङ्गिरो वर्षसंजाताय स्वाहः
ॐ सिन्धु देशाधिपाय स्वाहः
ॐ स्वर्णकायाय स्वाहः
ॐ चतुर्भुजाय स्वाहः
ॐ हेमवपुषे स्वाहः
ॐ पुष्यनाथाय स्वाहः
ॐ पुष्यराग मणिमण्डन मण्डिकाशाय स्वाहः
ॐ पुष्प समानाभाय स्वाहः
ॐ असमान बलाय स्वाहः
ॐ भूसुराभीष्टदाय स्वाहः
ॐ पुण्यविवर्धनाय स्वाहः
ॐ धनाध्यक्षाय स्वाहः
ॐ हेमाङ्गदाय स्वाहः
ॐ हेम भूषण भूषिताय स्वाहः

ॐ सर्ववेदान्तविदे स्वाहः
ॐ इन्द्राद्यमर संघपाय स्वाहः
ॐ सत्वगुणसंपत् विभावसवे विभावसवे स्वाहः
ॐ भूरियशसे स्वाहः
ॐ धर्मरूपाय स्वाहः
ॐ धर्मपालनाय स्वाहः
ॐ सर्वापद् विनिवारकाय स्वाहः
ॐ स्वमतानु गतामराय स्वाहः
ॐ ऋक्ष राशिमार्ग प्रचारवते स्वाहः
ॐ सदानन्दाय स्वाहः
ॐ सत्यसंघाय स्वाहः
ॐ सर्वज्ञाय स्वाहः
ॐ ब्राह्मणेशाय स्वाहः
ॐ सामनाधिक निंभुक्ताय स्वाहः
ॐ सर्वलोक वंशवदाय स्वाहः
ॐ ससुरासुर गन्धर्व वन्दिताय स्वाहः
ॐ सत्यभाषणाय स्वाहः
ॐ दयावते स्वाहः
ॐ लोकत्रयगुरवे स्वाहः

ॐ सर्वगाय स्वाहः
ॐ सर्वदाय स्वाहः
ॐ सत्य संकल्प मानसाय स्वाहः
ॐ धनदाय स्वाहः
ॐ सर्ववेदार्थ तत्त्वज्ञाय स्वाहः
ॐ सर्वपाप प्रशमनाय स्वाहः
ॐ ऋग्वेद पारगाय स्वाहः
ॐ सुरा चार्याय स्वाहः
ॐ सर्वा गमज्ञाय स्वाहः
ॐ ब्रह्मपुत्राय स्वाहः
ॐ ब्रह्मविद्या विशारदाय स्वाहः
ॐ बृहस्पतये स्वाहः
ॐ शुभलक्षणाय स्वाहः
ॐ श्रीमते स्वाहः
ॐ सर्वतोविभवे स्वाहः
ॐ सर्वदातुष्टाय स्वाहः
ॐ सर्वपूजिताय स्वाहः
ॐ सर्वेशाय स्वाहः

# शुक्रस्तोत्रम्

अस्य श्रीशुक्रस्तोत्रस्य प्रजापति- ॠषिः। अनुष्टुप् छन्दः। शुक्रो देवता शुक्रप्रीत्यर्थं जपे विनियोगः।

नमस्ते भार्गवश्रेष्ठ, दैत्यदानवपूजित।
वृष्टिरोधप्रकर्त्रे च, वृष्टिकर्त्रे नमो नमः॥
देवयानिपितस्तुभ्यं, वेदवेदांगपारगः।
परेण तपसा शुद्धः, शंकरो लोकसुंदरः॥
प्राप्तो विद्यां जीवनाख्यां, तस्मै शुक्रात्मने नमः।
नमस्तस्मै भगवते, भृगुपुत्राय वेधसे॥
तारामंडलमध्यस्थ, स्वभासाभासितांबरः।
यस्योदये जगत्सर्वे, मंगलार्हे भवेदिह॥
अस्तं याते ह्यरिष्टं, स्यात् तस्मै मंगलरूपिणे।
त्रिपुरावासिनो दैत्यान्, शिवबाणप्रपीडितान्॥
विद्ययाऽजीवयच्छक्रो, नमस्ते भृगुनंदन।
ययातिगुरवे तुभ्यं, नमस्ते कविनंदन॥
बलिराज्यप्रदो जीव, स्तस्मै जीवात्मने नमः।
भार्गवाय नमस्तुभ्यं, पूर्वगीर्वाणवंदित॥
जीवपुत्राय यो विद्यो, प्रादात्तस्मै नमो नमः।
नमः शुक्राय काव्याय, भृगुपुत्राय धीमहि॥
यद्यत्प्रार्थयते जन्तुस्तत्तत्प्राप्नोति सर्वदा।

प्रातः काले प्रकर्तव्या, भृगुपूजा प्रयत्नतः।।
सर्वपापविनिर्मुक्तः, प्राप्नुयात् शिव, सन्निधिम्।।

इति श्रीशुक्रस्तोत्रं संपूर्णम्।।

## शुक्र कवचम्

अस्य श्रीशुक्रकवचस्तोत्रमंत्रस्य भारद्वाज ऋषिः। अनुष्टुप् छन्दः। शुक्रो देवता। शुक्रप्रीत्यर्थं जपे विनियोगः।

ॐ शिरो मे भार्गवः पातु, भालं पातु ग्रहाधिपः।
नेत्रे दैत्यगुरुः पातु, श्रोत्रे मे चन्दनद्युतिः।।
पातु मे नासिकां काव्यो, वदनं दैत्यवन्दितः।
जिह्वा मे चोशनाः पातु, कंठं श्रीकंठभक्तिमान्।।
भुजौ तेजोनिधिः पातु, कुक्षिं पातु मनोव्रजः।
नाभिं भृगुसुतः पातु, पातु मध्यं महीप्रियः।।
कटिं मे पातु विश्वात्मा, उरु मे सुरपूजितः।
जानू जाड्याहरः पातु, जंघे ज्ञानवतां वरः।।
गुल्फौ गुणनिधिः पातु, पातु पादौ वरांबरः।
सर्वाण्यंगानि मे पातु, स्वर्णमाला परिष्कृतः।।
य इदं कवचं दिव्यं, पठति श्रद्धयान्वितः।
नतस्य जायते पीडा, भार्गवस्य प्रसादतः।।



इति श्रीशुक्रकवच संपूर्णम्।।

# शुक्र नामावली

ॐ शुक्राय स्वाहः

ॐ शुभगुणाय स्वाहः

ॐ शोभनाक्षाय स्वाहः

ॐ दीनार्ति-हारकाय स्वाहः

ॐ देवाभि वन्दिताय स्वाहः

ॐ कामपालाय स्वाहः

ॐ कल्याण दायकाय स्वाहः

ॐ शुभ्रवाहाय स्वाहः

ॐ भद्रगुणाय स्वाहः

ॐ भक्तपालनाय स्वाहः

ॐ भुवनाध्यक्षाय स्वाहः

ॐ सर्वलक्षण संपन्नाय स्वाहः

ॐ चारूरूपाय स्वाहः

ॐ निधये स्वाहः

ॐ नीतिविद्या धुरंधराय स्वाहः

ॐ समानाधिक निर्मुक्ताय स्वाहः

ॐ भृगवे स्वाहः

ॐ भूमि सुरपालन तत्पराय स्वाहः
ॐ मानदाय स्वाहः
ॐ मायातीताय स्वाहः
ॐ बलिप्रसन्नाय स्वाहः
ॐ बलिने स्वाहः
ॐ भव पाशंपरित्यागाय स्वाहः
ॐ घनाशयाय स्वाहः
ॐ शुचये स्वाहः
ॐ शुभलक्षणाय स्वाहः
ॐ शुद्धस्फटिक भास्वराय स्वाहः
ॐ दैत्यगुरवे स्वाहः
ॐ काव्यासक्ताय स्वाहः
ॐ कवये स्वाहः
ॐ शुभदाय स्वाहः
ॐ भ्रदमूर्तये स्वाहः
ॐ भार्गवाय स्वाहः
ॐ भोगदाय स्वाहः
ॐ भुक्ति मुक्ति फलप्रदाय स्वाहः

ॐ चारु चन्द्र निभाननाय स्वाहः
ॐ चारुशीलाय स्वाहः
ॐ निखिल शास्त्रज्ञाय स्वाहः
ॐ सर्वाव गुणवर्जिताय स्वाहः
ॐ सकलागम पारगाय स्वाहः
ॐ भोगकराय स्वाहः
ॐ मनस्विने स्वाहः
ॐ मान्याय स्वाहः
ॐ महायशसे स्वाहः
ॐ अभयदाय स्वाहः
ॐ सत्य पराक्रमाय स्वाहः
ॐ बलिबन्ध विमोचकाय स्वाहः
ॐ कंबु ग्रीवाय स्वाहः
ॐ कारुण्य रससंपूर्णाय स्वाहः
ॐ श्वेतांबराय स्वाहः
ॐ चतुर्भुज समन्विताय स्वाहः
ॐ अचिन्त्याय स्वाहः
ॐ नक्षत्र गण संचाराय स्वाहः

ॐ नीति मार्गदाय स्वाहः
ॐ हृषीकेशाय स्वाहः
ॐ भृगुसुताय स्वाहः
ॐ शान्तमतये स्वाहः
ॐ आधि व्याधिहराय स्वाहः
ॐ पुण्यदायकाय स्वाहः
ॐ पूज्याय स्वाहः
ॐ अजेयाय स्वाहः
ॐ विविधाभरणो ज्जवलाय स्वाहः
ॐ मन्दहासाय स्वाहः
ॐ मुक्ताफल समानाभाय स्वाहाः
ॐ घनाध्यक्षाय स्वाहः
ॐ कलाधराय स्वाहः
ॐ कल्याण गुणवर्द्धनाय स्वाहः
ॐ श्वेतवपुषे स्वाहः
ॐ अक्षमालाधराय स्वाहः
ॐ अक्षीण गुणभासुराय स्वाहः
ॐ नयदाय स्वाहः

ॐ वर्षप्रदाय स्वाहः
ॐ क्लेश नाशकराय स्वाहः
ॐ चिन्तितार्य प्रदाय स्वाहः
ॐ चित्त समाधिकृते स्वाहः
ॐ भूरि विक्रमाय स्वाहः
ॐ पुराण पुरुषाय स्वाहः
ॐ पुरुहूतादि सन्नुताय स्वाहः
ॐ विजिता रातये स्वाहः
ॐ कुन्दपुष्प प्रतीकाशाय स्वाहः
ॐ सर्वगीर्वाण गणसन्नुताय स्वाहः
ॐ महामतये स्वाहः
ॐ मुनि सन्नुताय स्वाहः
ॐ रथस्थाय स्वाहः
ॐ सूर्यप्राग्देश संचाराय स्वाहः
ॐ असुर पूजिताय स्वाहः
ॐ दुर्द्धराय स्वाहः
ॐ भाग्यदाय स्वाहः
ॐ भवपाश विमोचकाय स्वाहः
ॐ गोप्त्रे स्वाहः

ॐ गुण विभूषणाय स्वाहः
ॐ ज्येष्ठाय स्वाहः
ॐ शुचि स्मिताय स्वाहः
ॐ अनन्ताय स्वाहः
ॐ सर्वैश्वर्य प्रदाय स्वाहः
ॐ मुक्तिदाय स्वाहः
ॐ रत्न सिंहासनारूढाय स्वाहः
ॐ रजत प्रभाय स्वाहः
ॐ सुरशत्रु सुहृदे स्वाहः
ॐ तुला वृषभराशीशाय स्वाहः
ॐ धर्मपालकाय स्वाहः
ॐ भव्य चारित्राय स्वाहः
ॐ गौड देशेश्वराय स्वाहः
ॐ गुणिने स्वाहः
ॐ ज्येष्ठा नक्षत्र संभूताय स्वाहः
ॐ श्रेष्ठाय स्वाहः
ॐ अपवर्ग प्रदाय स्वाहः
ॐ सन्तानफल दायकाय स्वाहः

# शनैश्चरस्तोत्रम्

अस्य श्रीशनैश्चरस्तोत्रस्य दशरथ ऋषिः। शनैश्चरो देवता। त्रिष्टुप् छन्दः। शनैश्चरप्रीत्यर्थं जपे विनियोगः

कोणोऽन्तको रौद्रयमोऽथ बभ्रुः, कृष्णः शनिः पिंगलमन्दसौरिः।
नित्यां स्मृतो यो हरते च पीड़ा, तस्मै नमः श्रीरविनन्दना च।।
सुरासुराः किंपुरुषोरगेन्द्रा, गन्धर्वविद्याधरपन्नगाश्च।
पीडयन्ति सर्वे विषमस्थितेन, तस्मै नमः श्री रवि नन्दना च।।
नरा नरेन्द्राः पशवो मृगेन्द्रा, वन्याश्च ये कीटपतंगभृंगा।
पीडयन्ति सर्वे विषमस्थितेन, तस्मै नमः श्री रवि नन्दना च।।
प्रयागकूले यमुनातटे च, सरस्वतीपुण्यपले गुहायाम्।
यो योगिनां ध्यानगतोऽपि सूक्ष्मः, तस्मैनमः श्री रवि नन्दना च।।
अन्यप्रदेशात्स्वगृहं प्रविष्टः, तदीयवारे स नरः सुखी स्यात्।
गृहात्गतो यो न पुनः प्रयाति, तस्मै नमः श्री रवि नन्दना च।।
स्रष्टा स्वयंभूर्भुवः त्रयस्य, त्राता हरीशो हरते पिनांकी।
एकस्त्रिधा ऋग्यजुः साममूर्तिः, तस्मै नमः श्री रवि नन्दना च।।
शन्यष्टकं यः प्रयतः प्रभाते, नित्यं सुपुत्रैः पशुबान्धवैश्च।
पठेतु सौख्यं भुवि भोगयुक्तः, प्राप्नोति निर्बाणपदं तदन्ते।।

इति श्रीशनैश्चरस्तोत्रं संपूर्णम्।

## ॥ शनि कवचम् ॥

अस्य श्रीशनैश्च्चर कवचस्तोत्र मंत्रस्य कश्यप ऋषिः।

अनुष्टुप् छंदः। शनैश्चरो देवता। शीं शक्तिः। शूं कीलकम्। शनैश्चरप्रीत्यर्थं जपे विनियोगः।।

शृणुध्वगृषयः सर्वे, शनिपीडाहरं महत्।
कवचं शनिराजस्य, सौरेरिदम् अनुत्तमम्।।
कवचं देवतावासं, वज्रपंचरसंशकम्।
शनैश्चरप्रीतिकरं, सर्वसौभाग्य दायकम्।।
ॐश्रीशनैश्चरः पातु, भालं मे सूर्यनंदनः।
नेत्रे छायात्मजः पातु, पातु कर्णौ यमानजः।।
नासां वैवस्वतः पातु, मुखं मे भास्करः सदा।
स्निग्धकंठश्च मे कंठ, भुजौ पातु महाभुजः।।
स्कंधौ पातु शनिश्चैव, करौ पातु शुभप्रदं।
वक्षः पातु यमभ्राता, कुक्षिं पात्वसितस्तथा।।
पादौ मंदगतिः पातु, सर्वांगं पातु पिप्पलः।
अङ्गोपाङ्गानि सर्वाणि, रक्षेन्मे सूर्यनंदनः।।
इतयेतत्कवचं दिव्यं, पठेत्सूर्यसुतस्य यः।
न तस्य जायते पीडा, प्रीतो भवति सूर्यजः।।
अष्टमस्थे सूर्यसुते, व्यये जन्मद्वितीयगे।
कवचं पठतो नित्यं, न पीडा जायते क्वचित्।।
इत्येतत्कवचं दिव्यं, सौरेर्यन्निर्मितं पुरा।

इति शनैश्चरकवचं संपूर्णम्।

# शनि नामावली

ॐ शनैश्चराय स्वाहः

ॐ सर्वाभीष्ट प्रदायिने स्वाहः

ॐ वरेण्याय स्वाहः

ॐ सौम्याय स्वाहः

ॐ सुरलोक विहारिणे स्वाहः

ॐ सुन्दराय स्वाहः

ॐ घनरूपाय स्वाहः

ॐ घनसार विलेपाय स्वाहः

ॐ मन्दाय स्वाहः

ॐ महनीयगुणात्मने स्वाहः

ॐ महेशाय स्वाहः

ॐ शर्वाय स्वाहः

ॐ चरस्थिर स्वभावाय स्वाहः

ॐ नीलवर्णाय स्वाहः

ॐ नीलाञ्जन निभाय स्वाहः

ॐ शान्ताय स्वाहः

ॐ शरण्याय स्वाहः

ॐ सर्वेशाय स्वाहः

ॐ सुरवन्द्याय स्वाह

ॐ सुखासनो पविष्टाय स्वाहः

ॐ घनाय स्वाहः

ॐ घनाभरण धारिणे स्वाहः

ॐ खद्योताय स्वाहः

ॐ मन्दचेष्टाय स्वाहः

ॐ मर्त्यपावन पादाय स्वाहः

ॐ छाया पुत्राय स्वाहः

ॐ शततूणीर धारिणे स्वाहः

ॐ अचंचलाय स्वाहः

ॐ नित्याय स्वाहः

ॐ नीलांबर विभूषाय स्वाहः

ॐ निश्चलाय स्वाहः

ॐ विधिरूपाय स्वाहः

ॐ भेदास्पद स्वभावाय स्वाहः

ॐ वैराग्यदाय स्वाहः

ॐ वीतरोगभयाय स्वाहः

ॐ विश्ववन्द्याय स्वाहः
ॐ गूढाय स्वाहः
ॐ कुरूपिणे स्वाहः
ॐ गुणाढ्याय स्वाहः
ॐ अविद्या मूलनाशाय स्वाहः
ॐ आयुष्य कारणाय स्वाहः
ॐ विष्णुभक्ताय स्वाहः
ॐ विविधागम वेदिने स्वाहः
ॐ वन्द्याय स्वाहः
ॐ वरिष्ठाय स्वाहः
ॐ वज्रांकुश धराय स्वाहः
ॐ वामनाय स्वाहः
ॐ श्रेष्ठाय स्वाहः
ॐ कष्टौघ नाशकर्त्रे स्वाहः
ॐ स्तुत्याय स्वाहः
ॐ भक्तिवश्याय स्वाहः
ॐ भानुपुत्राय स्वाहः
ॐ पावनाय स्वाहः

ॐ धनदाय स्वाहः
ॐ तनुप्रकाश देहाय स्वाहः
ॐ वेद्याय स्वाहः
ॐ विरोधाधार भूमये स्वाहः
ॐ वज्रदेहाय स्वाहः
ॐ वीराय स्वाहः
ॐ विपत्परं परेशाय स्वाहः
ॐ गृध्रवाहाय स्वाहः
ॐ कूर्माङ्गाय स्वाहः
ॐ कुत्सिताय स्वाहः
ॐ गोचराय स्वाहः
ॐ विद्याविद्या स्वरूपिणे स्वाहः
ॐ आपदुद्धर्त्रे स्वाहः
ॐ वशिने स्वाहः
ॐ विधि स्तुत्याय स्वाहः
ॐ विरूपाक्षाय स्वाहः
ॐ गरिष्ठाय स्वाहः
ॐ वरदा भयहस्ताय स्वाहः

ॐ ज्येष्ठापत्नी समेताय स्वाहः
ॐ मितभाषिणे स्वाहः
ॐ पुष्टिदाय स्वाहः
ॐ स्तोत्रगम्याय स्वाहः
ॐ भानवे स्वाहः
ॐ भव्याय स्वाहः
ॐ धनुर्मण्डल संस्थाय स्वाहः
ॐ धनुष्मते स्वाहः
ॐ तामसाय स्वाहः
ॐ अशेषजन वन्द्याय स्वाहाः
ॐ वशीकृत जनेशाय स्वाहः
ॐ खेचराय स्वाहः
ॐ घननीलांबराय स्वाहः
ॐ आर्यगण स्तुत्याय स्वाहः
ॐ नित्याय स्वाहः
ॐ गुणात्मने स्वाहः
ॐ नन्द्याय स्वाहः
ॐ धीराय स्वाहः

ॐ दीनार्ति हरणाय स्वाहः
ॐ आर्यजन गण्याय स्वाहः
ॐ क्रूरचेष्टाय स्वाहः
ॐ कण्ठत्र पुत्र शत्रुत्व कारणाय स्वाहः
ॐ परिपोषित भक्ताय स्वाहः
ॐ विशेषफलदायिने स्वाहः
ॐ पशूनां पतये स्वाहः
ॐ खगेशाय स्वाहः
ॐ काठिन्य मानसाय स्वाहः
ॐ नीलच्छत्राय स्वाहः
ॐ निर्गुणाय स्वाहः
ॐ निरामयाय स्वाहः
ॐ वन्दनीयाय स्वाहः
ॐ दिव्यदेहाय स्वाहः
ॐ दैन्यनाशकराय स्वाहः
ॐ क्रूराय स्वाहः
ॐ काम क्रोधकराय स्वाहः
ॐ भक्त संघ मनोभीष्ट फलदाय स्वाहः
ॐ परिभीतिहराय स्वाहः

# राहुस्तोत्रम्

अस्य श्रीराहुस्तोत्रस्य वामदेव ऋषिः, गायत्री छन्दः, राहु देवता। राहुप्रीत्यर्थं जपे विनियोगः।

राहुर्दानवमन्त्री च, सिंहिकाचित्तनन्दनः।
अर्धकायः सदाक्रोधी, चन्द्रादित्यविमर्दनः।।
रौद्रो रुद्रप्रियो दैत्यः, स्वर्भानुर्भानभीतिदः।
ग्रहराजः सुधापायी, राकातिथ्यभिलाषुकः।।
कालदृष्टिः कालरूपः, श्रीकण्ठहृदयाश्रयः।
विधुंतुदः सैहिकेयो, घोररूपो महाबलः।।
ग्रहपीडाकरो दंष्ट्री, रक्तनेत्रो महोदरः।
पञ्चविंशति नामानि, स्मृत्वा राहुं सदा नरः।।
यः पठेन्महती पीडा, तस्य नश्यति केवलम्।
विरोग्यं पुत्रमतुलां, श्रियं धान्यं पशूंस्तथा।।
ददाति राहुस्तस्मै यः, पठते स्तोत्रमुत्तमम्।
सततं पठते यस्तु, जीवेद्वर्षशतं नरः।।

इति राहुस्तोत्रं संपूर्णम्।

# राहु कवचम्

अस्य श्रीराहुकवचस्तोत्रमंत्रस्य चन्द्रमा ऋषिः। अनुष्टुप् छंदः। रां बीजं। नमः शक्तिः। स्वाहा कीलकम्। राहुप्रीत्यर्थं जपे विनियोगः।

**प्रणमामि सदा राहुं, शूर्पाकारं किरिटिनम्।**
**सैंहिकेयं करालास्यं, लोकानामभयप्रदम्।।**
**नीलांबरः शिरः पातु, ललाटं लोकवंदितः।**
**चक्षुषी पातु मे राहुः, श्रोत्रे त्वर्धशरीरवान्।।**
**नासिकां मे धूम्रवर्णः, शूलपाणिर्मुखं मम।**
**जिह्वां मे सिंहिकासूनुः, कंठ मे कंठिनांध्रिकः।।**
**भुजंगेशो भुजौ पातु, नीलमाल्याम्बरः करौ।**
**पातु वक्षःस्थलं मंत्री, पातु कुक्षिं विधुंतुदः।।**
**कटिं मे विकटः पातु, उरू मे सुरपूजितः।**
**स्वर्भानुर्जानुनी पातु, जंघे मे पातु जाड्यहा।।**
**गुल्फौ ग्रहपतिः पातु, पादौ मे भीषणाकृतिः।**
**सर्वाण्यगानि मे पातु, नीलश्चन्दनभूषणः।।**

**इति राहुकवचं संपूर्णम्।।**

## राहु नामावली

ॐ राहवे स्वाहः
ॐ विधुन्तुदाय स्वाहः
ॐ तमसे स्वाहः
ॐ गार्ग्यायनाय स्वाहः
ॐ नीलजीमूत संकाशाय स्वाहः
ॐ खड्गखेटक धारिणे स्वाहः
ॐ शूलायुधाय स्वाहः
ॐ कृष्णध्वज पताकवते स्वाहः
ॐ तीक्ष्णदंष्ट्रा कराळकाय स्वाहः
ॐ गोमेधा भरणप्रियाय स्वाहः
ॐ काश्यपर्षि नन्दनाय स्वाहः
ॐ उल्कापातयित्रे स्वाहः
ॐ निधिपाय स्वाहः
ॐ शूर्पाकारा सनस्थाय स्वाहः
ॐ शात्रव प्रदाय स्वाहः
ॐ छाया स्वरूपिणे स्वाहः
ॐ द्विषच्छक्र च्छेदकाय स्वाहः

ॐ भयंकराय स्वाहः
ॐ तमोरूपाय स्वाहः
ॐ नीललोहिताय स्वाहः
ॐ नीलवसनाय स्वाहः
ॐ चण्डालवर्णाय स्वाहः
ॐ मेषभवाय स्वाहः
ॐ शूराय स्वाहः
ॐ उपरागकराय स्वाहः
ॐ देवाय स्वाहः
ॐ नीलपुष्प विहाराय स्वाहः
ॐ अष्टमग्रहाय स्वाहः
ॐ सैंहिकेयाय स्वाहः
ॐ सुरशत्रवे स्वाहः
ॐ फणिने स्वाहः
ॐ सुरारये स्वाहः
ॐ चतुर्भुजाय स्वाहः
ॐ वरदायक हस्तकाय स्वाहः
ॐ मेघवर्णाय स्वाहः

ॐ दक्षिणाशा मुखरथाय स्वाहः
ॐ विष ज्वालावृताऽऽस्याय स्वाहः
ॐ माषप्रियाय स्वाहः
ॐ भुजगेश्वराय स्वाहः
ॐ शूलिने स्वाहः
ॐ कृष्णसर्पराजे स्वाहः
ॐ अर्द्धशरीराय स्वाहः
ॐ रवीन्दुभीकराय स्वाहः
ॐ कठिनाङ्गकाय स्वाहः
ॐ करालास्याय स्वाहः
ॐ क्रूरकर्मणे स्वाहः
ॐ श्यामात्मने स्वाहः
ॐ किरीटिने स्वाहः
ॐ शनि सामन्त वर्त्मगाय स्वाहः
ॐ अश्व्यृ क्षभवाय स्वाहः
ॐ शनिवत् फलदाय स्वाहः
ॐ अपसव्य गतये स्वाहः
ॐ सोम सूर्यः छविविमर्दकाय स्वाहः

ॐ ग्रहश्रेष्ठाय स्वाहः
ॐ यातुधान कुलोद्भ वाय स्वाहः
ॐ देवजाति प्रविष्टकाय स्वाहः
ॐ घोराय स्वाहः
ॐ शुक्रमित्राय स्वाहः
ॐ माने गङ्गास्नान दात्रे स्वाहः
ॐ सद्‌गृहेऽन्यबल घृते स्वाहः
ॐ सिह्मजन्मने स्वाहः
ॐ राज्यदात्रे स्वाहः
ॐ जन्मकर्त्रे स्वाहः
ॐ मादका ज्ञानदाय स्वाहः
ॐ जन्महानिदाय स्वाहः
ॐ पञ्चमे शोकदायकाय स्वाहः
ॐ सप्तमे कलह प्रदाय स्वाहः
ॐ चतुर्थे वैरदायकाय स्वाहः
ॐ दशमे शोकदायकाय स्वाहः
ॐ कबंधमात्रदेहाय स्वाहः
ॐ गोविन्द वरपात्राय स्वाहः

ॐ क्रूराय स्वाहः
ॐ शनेर्मित्राय स्वाहः
ॐ अगोचराय स्वाहः
ॐ स्वगृहे प्रवलाढ्यदाय स्वाहः
ॐ चतुर्थ मातृनाशकाय
ॐ दानवाय स्वाहः
ॐ महाकायाय स्वाहः
ॐ विधुरिपवे स्वाहः
ॐ जन्मकन्या राज्यदात्रे स्वाहः
ॐ नवमे पितृहन्त्रे स्वाहः
ॐ द्यूने कलहप्रदाय स्वाहः
ॐ षष्ठे वित्तदात्रे स्वाहः
ॐ नवमे पापदात्रे स्वाहः
ॐ आदौ यशःप्रदात्रे स्वाहः
ॐ अन्ते वैरप्रदा सयकाय स्वाहः
ॐ गोचरचराय स्वाहः
ॐ पञ्चमे धिषणा शृङ्गदाय स्वाहः
ॐ बलिने स्वाहः
ॐ चन्द्रवैरिणे स्वाहः

ॐ सुरशत्रवे स्वाहः
ॐ शांभवाय स्वाहः
ॐ पाटीर पूरणाय स्वाहः
ॐ भक्तरक्षाय स्वाहः
ॐ सर्वाभीष्ट फलप्रदाय स्वाहः
ॐ कृष्णाय स्वाहः
ॐ विष्णु नेत्रारये स्वाहः
ॐ कालात्मने स्वाहः
ॐ घनेक कुत्प्रदाय स्वाहः
ॐ स्वर्भानवे स्वाहः
ॐ महा सौख्य प्रदायिने स्वाहः
ॐ शाश्वताय स्वाहः
ॐ पापग्रहाय स्वाहः
ॐ पूज्यकाय स्वाहः
ॐ पैठीनस कुलोद्भवाय स्वाहः
ॐ राहुमूर्तये स्वाहः
ॐ दीर्घाय स्वाहः
ॐ अतनवे स्वाहः



# केतुस्तोत्रम्

अस्य श्रीकेतु स्तोत्रस्य मधुच्छन्दो ऋषिः, गायत्री छन्दः। केतु देवता। केतुप्रीत्यर्थं जपे विनियोगः।

**केतुः कालः कलयिता, धूम्रकेतुर्विवर्णकः।**
**लोकेतुर्महाकेतुः, सर्वकेतुर्भयप्रदः ॥**
**रौद्रो रुद्रपियो रुद्रः, क्रूरकर्मा सुगन्धधृक्।**
**पलाशधूमसंकाशः, चित्रयज्ञोपवीतधृक् ॥**
**तारागणविमर्दी च, जैमिनेयो ग्रहाधिपः।**
**पञ्चविंशति नामानि, केतोर्यः सततं पठेत्॥**
**तस्य नश्यन्ति वाधाश्च, सर्वाः केतुप्रसादतः।**
**धनधान्यपशूनां च, भवेद्वृद्धिर्न संशयः ॥**

इति केतो स्तोत्रम् संपूर्णम्॥

## केतु कवचम्

अस्य श्रीकेतुकवचस्तोत्रमंत्रस्य त्र्यंबक ऋषिः। अनुष्टुप् छ़ंदः। केतुदेवता। कंबीजं। नमः शक्तिः। केतुरिति कीलकम्। केतुप्रीत्यर्थं जपे विनियोगः।

**केतुं करालवदनं, चित्रवर्णं किरीटिनम्।**
**प्रणमामि सदा केतुं, ध्वजाकारं ग्रहेश्वरम्॥**

चित्रवर्णः शिरः पातु, भालं धूम्रसमद्युतिः।
पातु नेत्रे पिंगलाक्षः, श्रुति मे रक्तलोचनः।।
घ्राणं पातु सुवर्णाभः, चिबुकं सिंहिकासुतः।
पातु कंठं च मे केतुः, स्कंधौ पातु ग्रहाधिपः।।
हस्तौ पातु तुरश्रेष्ठः, कुक्षिं पातु महाग्रहः।
सिंहासनः कटिं पातु, मध्यं पातु महासुरेः।।
उरु पातु महाशीर्षो, जानुनी मेऽतिकोपनः।
पातु पादौ च मे क्रूरः, सर्वांगं नरपिंगल।।
य इदं कवचं दिव्यं, सर्वरोगविनाशनम्।
सर्वशत्रुविनाशं च, धारणाद्विजयी भवेत्।।

इति केतुकवचं संपूर्णम्।।

## केतु नामावली

ॐ केतवे स्वाहः
ॐ शिरोमात्राय स्वाहः
ॐ नवग्रहयुताय स्वाहः
ॐ महाभीतिकराय स्वाहः
ॐ श्रीपिङ्गलाक्षकाय स्वाहः
ॐ तीष्णदंष्ट्राय स्वाहः
ॐ रक्तनेत्राय स्वाहः
ॐ तीव्रकोपाय स्वाहः

ॐ क्रूरकण्ठाय स्वाहः
ॐ छायाग्रह विशेषकाय स्वाहः
ॐ महाशीर्षाय स्वाहः
ॐ पुष्पवद् ग्रहिणे स्वाहः
ॐ गदापाणये स्वाहः
ॐ स्थूलशिरसे स्वाहः
ॐ ध्वजाकृतये स्वाहः
ॐ सिंहिकाऽसुरीगर्भ संभवाय स्वाहः
ॐ चित्रवर्णाय स्वाहः
ॐ फुल्लुधूम सकाशाय स्वाहः
ॐ महोदराय स्वाहः
ॐ चित्रकारिणे स्वाहः
ॐ महासुराय स्वाहः
ॐ क्रोधनिधये स्वाहः
ॐ अन्त्यग्रहाय स्वाहः
ॐ सूर्यारये स्वाहः
ॐ वरहस्ताय स्वाहः
ॐ चित्र ध्वज पताकाय स्वाहः
ॐ चित्र रथाय स्वाहः
ॐ कुलुत्थ भक्षकाय स्वाहः

ॐ उत्पातं जनकाय स्वाहः
ॐ मन्दसखाय स्वाहः
ॐ नाकपतये स्वाहः
ॐ जैमिनि गोत्रजाय स्वाहः
ॐ दक्षिणामुखाय स्वाहः
ॐ महासुर कुलोद्भवाय स्वाहः
ॐ लंबदेवाय स्वाहः
ॐ उत्पातरूप धारिणे स्वाहः
ॐ कालाग्नि सन्निभाय स्वाहः
ॐ गृहकारिणे स्वाहः
ॐ चित्रप्रसूताय स्वाहः
ॐ अष्टम ग्रहाय स्वाहः
ॐ सर्वव्याधि विनाशकाय स्वाहः
ॐ नवमे पाप दायकाय स्वाहः
ॐ उपराग खेचराय स्वाहः
ॐ तुरीये सुख प्रदाय स्वाहः
ॐ पापग्रहाय स्वाहः
ॐ प्राणनाथाय स्वाहः
ॐ द्वितीयेऽ स्टुट वाग्दात्रे स्वाहः
ॐ चित्र वस्त्रधराय स्वाहः

ॐ घोराय स्वाहः
ॐ शिखिने स्वाहः
ॐ वैडूर्या भरणाय स्वाहः
ॐ शुक्रमित्राय स्वाहः
ॐ गदाधराय स्वाहः
ॐ अन्तर्वेदीश्वराय स्वाहः
ॐ चित्रगुप्तात्मने स्वाहः
ॐ मुकुन्दवरपात्राय स्वाहः
ॐ घनवर्णाय स्वाहः
ॐ मृत्यु पुत्राय स्वाहः
ॐ अदृश्याय स्वाहः
ॐ नृपीडाय स्वाहः
ॐ सर्वोपद्रव वारकाय स्वाहः
ॐ अनलाय स्वाहः
ॐ अपसव्यपचारिणे स्वाहः
ॐ पञ्चमे शोकदाय स्वाहः
ॐ अतिपुरुष कर्मणे स्वाहः
ॐ तृतीय वैरदाय स्वाहः
ॐ स्फोटक कारकाय स्वाहः
ॐ पञ्चमे श्रमकारकाय स्वाहः

ॐ विषाकुलित वक्तकाय स्वाहः
ॐ कामरूपिणे स्वाहः
ॐ कुशेध्म प्रियाय स्वाहः
ॐ नवमे पितृनाशकाय स्वाहः
ॐ सुतानन्द निधानकाय स्वाहः
ॐ अनङ्गाय स्वाहः
ॐ उपान्ते कीर्तिदाय स्वाहाः
ॐ अष्टमे व्याधिकर्त्रे स्वाहः
ॐ जनने रोगदाय स्वाहः
ॐ ग्रहनायकाय स्वाहः
ॐ खेचराय स्वाहः
ॐ अशेष पूजिताय स्वाहः
ॐ नटाय स्वाहः
ॐ धूम्राय स्वाहः
ॐ अजिताय स्वाहः
ॐ सिंहासनाय स्वाहः
ॐ रविन्दु द्युतिनाशकाय स्वाहः
ॐ पीडकाय स्वाहः
ॐ विष्णु दृष्टाय स्वाहः
ॐ भक्तरक्षाय स्वाहः

ॐ विचित्र फलदायिने स्वाहः
ॐ सिंहदन्ताय स्वाहः
ॐ चतुर्थे मातृनाशाय स्वाहः
ॐ अन्त्ये वैरप्रदाय स्वाहः
ॐ सर्पाक्षिजाताय स्वाहः
ॐ कर्मराश्युद्भवाय स्वाहः
ॐ सप्तमे कलहप्रदाय स्वाहः
ॐ धने बहुसुखप्रदाय स्वाहः
ॐ ऊर्ध्व मूर्धजाय स्वाहः
ॐ पापदृष्टये स्वाहः
ॐ शांभवाय स्वाहः
ॐ शाश्वताय स्वाहः
ॐ शुभाशुभ फलप्रदाय स्वाहः
ॐ सुधापायिने स्वाहः
ॐ भक्तवत्सलाय स्वाहः
ॐ केतुमुर्तये स्वाहः
ॐ अमराय स्वाहः
ॐ अमर्त्याय स्वाहः
ॐ असुरेश्वराय स्वाहः
ॐ वैचित्र्य क्पोतस्य ननदनाय स्वाहः
ॐ भक्ताभीष्ट फलप्रदाय स्वाहः

# ज़रा ध्यान दें

## इन से सम्पर्क करें।

1. **विजयेश्वर ज्योतिष कार्यालय**
तालाब तिलो (जैन कालोनी के नज़दीक)
जम्मू फोन : 2555763

2. **विजयेश्वर ज्योतिष कार्यालय**
(J. K. BOOK SHOP)
तालाब तिलो, गली नं० 1, जम्मू
फोनः 2505423, 9419240070

3. **विजयेश्वर ज्योतिष कार्यालय**
चिनार चौक (रूप नगर), जम्मू
फोन : 9419103424

(हम आपकी सेवा के लिये हर समय उपलब्ध हैं।)

